॥ श्रीदेवीषट्कं अथवा मातङ्गीषट्कम् ॥

श्रीगणेशाय नमः ।
अम्ब शशिबिम्बवदने कम्बुग्रीवे कठोरकुचकुम्भे ।
अम्बरसमानमध्ये शम्बररिपुवैरिदेवि मां पाहि ॥ १॥

कुन्दमुकुलाग्रदन्तां कुङ्कुमपङ्केन लिप्तकुचभारां ।
आनीलनीलदेहामम्बामखिलाण्डनायकीं वन्दे ॥ २॥

सरिगमपधनिसतान्तां वीणासङ्क्रान्तचारुहस्तां ताम् ।
शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्तां ॥ ३॥

अरटतटघटिकजूटीताडिततालीकपालताटङ्कां ।
वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ४॥

वीणारसानुषङ्गं विकचमदामोदमाधुरीभृङ्गम् ।
करुणापूरितरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ५॥

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां सङ्गीत मातृकां वन्दे ॥ ६॥

माणिक्यवीणा मुपलालयन्तीं मदालसां मञ्जुलवाग्विलासाम् ।
महेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां मनसा स्मरामि ॥ ७॥

॥ इति श्रीकालिकापुराणे देवीषट्कं अथवा मातङ्गीषट्कं समाप्तम् ॥